# आश्वलायनगृह्यपरिशिष्टम्

https://sa.wikisource.org/s/19wj
आश्वलायनगृह्यपरिशिष्टम्

१५ नारायणबलिः ।

अथ नारायणबलिरर्वाक्तसंस्काराच्छुद्धे काले शुक्लैकादश्यां स्नातः शुचौ देशे विष्णुं वैवस्वतं प्रेतं च यथावदभ्यर्च्य तदग्रे तिलमिश्रान्मधुघृतप्लुतान्दश पिण्डान्विष्णुरूपं प्रेतं ध्यायन्काश्यपगोत्र देवदत्तायं ते पिण्ड इति दक्षिणाग्रेषु दर्भेषु दक्षिणामुखः प्राचीनवीती पराचीनेन पाणिना दत्त्वा पिण्डान्गन्धादिभिरभ्यर्च्य प्रवाह णान्तं कृत्वा नद्यां क्षिपेत् । अथ रात्रावयुग्मान्ब्राह्मणान्निमन्त्रयोपोषितः श्वो मध्यं दिने विष्णुमभ्यर्च्य प्रेतमुद्दिश्य ब्राह्मणानेकोद्दिष्टेविधिना भोजयित्वा तृप्तेषु ब्राह्म णसमीपे पिण्डविधिना निनयनान्तं तूष्णीं कृत्वा विष्णवे ब्रह्मणे शिवाय सपरिवाराय यमाय विष्णोऽयं ते पिण्ड इत्येवं चतुरः पिण्डान्भुक्तशेषेण दक्षिणसंस्थान्दत्त्वाऽथ पञ्चमं काश्यपगोत्र देवदत्तेति प्रेतं ध्यात्वा तद्रूपाय विष्णवे विष्णाऽयं त इति दद्यात् । अथाऽऽचान्तान्दक्षिणया संतोष्यैकं तेषु गुणवन्तमविशेषतो वस्त्रा भरणादिगोहिरण्यैः प्रेतबद्ध्या तोषयेत् । अथ तैः पवित्रपाणिभिः प्रेताय काश्यपगोत्रायायं ते तिलोदकाञ्जलिरिति तिलोदकं दापयित्वाऽनेन नारायणबलिकर्मणा भगवान्विष्णुरिमं देवदत्तं शुद्धमपापं कर्मार्हं करोत्विति वाचयित्वा विसृजेत् । एष नारायणबलिकल्पः । एवमन्यामपि स्वाभिमतदेवतां यमद्वितीयामभ्यर्च्य विधिमिमं कुर्यात्तोऽप्येनमपापं करोति न तु पुण्यकृतोऽपि बलिमेनमकृत्वा पारलौकिकं कुर्यात्कृतं नोपतिष्ठतेऽन्तरिक्षे विनश्यति तस्माद्यथासंभवमपि कुर्यादत् ।। १५ ।।

१६ नागबलिः ।

अथ नागबलिः सर्पहतानां दारुमयं मृन्मयं वा पञ्चफणं सर्पं कृत्वा भाद्रपद- स्यान्यस्ये वा मासस्य शुक्लपञ्चमीमारभ्य यावत्संवत्सरं पतिमासं तस्यामुपोषितो रात्रौ पञ्चामृतैः स्नापयित्वा शुचावासने शुचिः सुरभिगन्धपुष्पधूपदीपैरभ्यर्च्य प्रणमेत् । अनुमासमेकैकमनन्तं वासुकिं शेषं पद्मं कम्बलं कर्कोटकमश्वतरं धृतराष्ट्रं शङ्खपालं कालीयं तक्षकं कपिलमिति पायससर्पिःक्षीरापूपैर्बलिमुपहृत्य जागरित्वा श्वोभूते त्रिवृतान्नेन ब्राह्मणान्भोजयित्वा पूर्णे संवत्सरे पञ्चम्यां च स्नात्वा सौवर्णं सर्पं गां च ब्राह्मणाय दत्त्वाऽन्यांश्च यथेष्टं भोजयित्वा दक्षिणया तोषयित्वा नागान्प्रीतिं वाचयेद् । एष नागबलिः अथोभयोः पक्षयोः पञ्वमीषु संमृष्टायां भुवि पिष्टेन सर्पमुल्लिख्य शुक्लसुरभिगन्धादिभिरभ्यर्च्य क्षीरमोदकान्निवेद्योपस्थाय मुञ्च मुञ्च देवदत्तमिति प्राथ्र्य सह बन्धुभिर्मधुरमश्नीयादेवं संवत्सरान्ते नारायणबलिं चोक्त वत्कृत्वा तत ऊर्ध्वं कर्म कुर्यात् ।। १६ ।।

१८ वृषोत्सर्गविधिः ।

अथ वृषोत्सर्गः शूलगवं कार्तिक्यां पौर्णमास्यां वैशाख्यां वा रेवत्यां वाऽऽश्व- युजीयस्य गोर्जीवत्पुत्रायः पयस्विन्याः सुतं श्रेष्ठं स्वस्य यूथस्याकुष्ठिनमपृषतमेक हायनं द्विहायनं वा नीलं बभ्रुं पिङ्गलं लोहितं वा लक्षण्यमित्येके कामं कृष्ण मालोहितं श्वेतमष्टभिः सह वत्सतरीभिश्वतसृभिर्वा व्रीहियवमतीभिरद्भिरापोहिष्ठी- याभिर्वामदेव्येन कर्म संकल्प्य पूर्वप्राञ्चमभिषिच्यापां तीरे गोष्ठे चतुष्पथे वाऽग्नि मुपसमाधाय रौद्रं स्थालीपाकं सर्वहुतं हुत्वा सौम्यं पायसं पैष्टं यावकं पूर्णपात्रोद- केन मार्जयित्वाऽग्निं त्रिः प्रदक्षिणं पर्यानीय कद्रुद्रायेमा रुदायाऽऽते पितरिमा रुद्राय स्थिरधन्वने गिर इति सूक्तैश्वतस्रो दिश उपस्थाय प्राञ्चं प्रागुदञ्चं वा वत्सतरीसमेतमुत्सृज्य, एनं युवानं पीतं वो ददामि तेन क्रीड(ळ)न्तीश्चरथ प्रियेण । इमां च त्वां प्रजनुषा सुवाचा रायस्पोषेण समिषा चिनोमि । शान्ता पृथिवी शिव-प मन्तरिक्षं द्यौर्नो देव्यभयं नो अस्तु । शिवा दिशः प्रदिश उद्दिशो न आपा विद्युतः परिपान्तु सर्वत इत्यृषभं मासमानानामिति च सूक्तेनौपस्थाय स यत्पिबति खादति लाङ्गूलं चोदक्पूर्णमुदस्यति तेन देवानृषीन्पितृंश्च प्रीणाति वंश्यांश्चाऽऽ- सप्तमभुभयतः परावरानुद्धरति प्रेतार्थमुत्सृष्टं महतो नरकादुत्तारयति, तस्मादेकाद- शेऽह्नि प्रेताय वृषमुत्सृजेदाद्यमासिकं दत्त्वा सोऽयं वृषोत्सर्गः स्वर्ग्यः पशव्यो वृष- भमुत्सृज्य महापशुर्भवतीति विज्ञायते नानुत्सृष्टः स्यादित्याचार्यः । तस्मान्नित्यश्चैके रुद्रमेव जपन्ते स एव पशुपतिरिति शन्तातीयं जपन्गृहनेत्य सर्पिषौदनं ब्राह्मण-

न्भोजयित्वाऽग्नी रुद्रः शर्वः पशुपतिरुग्रः शूली भवो महादेव इति नामभिरर्चये- द्रुद्रमेव वा यथा संभवमुद्दिशेत्स्वस्त्ययनं वाचयेदेवमेतानि कर्माणि यथोक्तं कुर्या- त्सर्वाणि श्रेयांस्याप्नोति तदेतदाश्वलायनगृह्यपरिशिष्टं नम आश्वलायनाय नम आश्वलायनाय ।। १८ ।।

इत्याश्वलायनगृह्यपरिशिष्टे तृतीयोऽध्यायः ।। ३ ।।

अथ चतुर्थोऽध्यायः ।